# चन्द्रकवचम्

## श्रीगणेशाय नमः ।

अस्य श्रीचन्द्रकवचस्तोत्रमन्त्रस्य गौतम् ऋषिः ।
अनुष्टुप् छन्दः, श्रीचन्द्रो देवता, चन्द्रप्रीत्यर्थं जपे विनियोगः ।
समं चतुर्भुजं वन्दे केयूरमुकुटोज्ज्वलम् ।
वासुदेवस्य नयनं शङ्करस्य च भूषणम् ॥ १॥
एवं ध्यात्वा जपेन्नित्यं शशिनः कवचं शुभम् ।
शशी पातु शिरोदेशं भालं पातु कलानिधिः ॥ २॥
चक्षुषी चन्द्रमाः पातु श्रुती पातु निशापतिः ।
प्राणं क्षपाकरः पातु मुखं कुमुदबान्धवः ॥ ३॥
पातु कण्ठं च मे सोमः स्कन्धे जैवातृकस्तथा ।
करौ सुधाकरः पातु वक्षः पातु निशाकरः ॥ ४॥
हृदयं पातु मे चन्द्रो नाभिं शङ्करभूषणः ।
मध्यं पातु सुरश्रेष्ठः कटिं पातु सुधाकरः ॥ ५॥
ऊरू तारापतिः पातु मृगाङ्को जानुनी सदा ।
अब्धिजः पातु मे जङ्घे पातु पादौ विधुः सदा ॥ ६॥
सर्वाण्यन्यानि चाङ्गानि पातु चन्द्रोऽखिलं वपुः ।
एतद्धि कवचं दिव्यं भुक्तिमुक्तिप्रदायकम् ।
यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७॥
॥ इति श्रीचन्द्रकवचं सम्पूर्णम् ॥

# वंशलाभाख्यकवचम्

## नारद उवाच –

भगवन् सर्वधर्मज्ञ पार्वतीप्राणवल्लभ ।
वंशलाभाख्यकवचं कृपया मे प्रकाशय ॥

## ईश्वर उवाच –

वंशलाभाख्यकवचं दुर्लभं भुवनत्रये ।
यस्य प्रसादात् कमला लेभे तनयमुत्तमम् ॥
कामदेवमपर्णा च विनायकषडाननौ ।
जयन्तमिन्द्रवनिता देवपत्न्यः सुतानपि ॥

## विनियोगः –

अस्य वंशलाभाख्यकवचस्य नैरदऋषिरनुष्टुप्छन्दः,
श्रीपार्वती देवता, श्रीचितितनयप्राप्तये विनियोगः ।
पार्वती मे शिरः पातु वक्त्रं पातु महेश्वरी ।
भवानी नयने पातु भ्रुवौ शङ्करसुन्दरी ॥ १॥
मध्ये पातु महेशानी नितम्बं सुरवन्दिता ।
ऊरू गौरी सदा पातु कौशिकी जानुयुग्मकम् ॥ २॥
बाहु द्वौ सुमुखी पातु पाणियुग्मं सुभाविनी ।
पादौ ब्रह्ममयी पातु श्रवणे भुवनेश्वरी ॥ ३॥
नासिके ललिता पातु कण्ठं त्रिपुरसुन्दरी ।
रुद्राणी हृदयं पातु स्तनद्वन्द्वं महेश्वरी ॥ ४॥
आपादमस्तकं पातु सर्वाङ्गं सर्वमङ्गला ।
इति ते कथितं विप्र कवचं देवपूजितम् ॥ ५॥
पठित्वा धारयित्वा च अक्षयं तनयं लभेत् ।
ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वा पठेन्नरः ॥ ६॥
सहस्रादित्यसङ्काशां सर्वाभरणभूषिताम् ।
त्रिनेत्रां पाणिभिर्बिभ्रत्पाशाङ्कुशवराभयान् ॥ ७॥
॥ श्रीनैरतन्त्रे शिवनारदसंवादे वंशलाभाख्यकवचं सम्पूर्णं ॥

# श्रीमहालक्ष्मीकवचम्

## श्री गणेशाय नमः ।

अस्य श्रीमहालक्ष्मीकवचमन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः
महालक्ष्मीर्देवता महालक्ष्मीप्रीत्यर्थं जपे विनियोगः ।
इन्द्र उवाच । समस्तकवचानां तु तेजस्वि कवचोत्तमम् ।
आत्मरक्षणमारोग्यं सत्यं त्वं ब्रूहि गीष्पते ॥ १॥
श्रीगुरुरुवाच । महालक्ष्म्यास्तु कवचं प्रवक्ष्यामि समासतः ।
चतुर्दशसु लोकेषु रहस्यं ब्रह्मणोदितम् ॥ २॥
ब्रह्मोवाच । शिरो मे विष्णुपत्नी च ललाटममृतोद्भवा ।
चक्षुषी सुविशालाक्षी श्रवणे सागराम्बुजा ॥ ३॥
घ्राणं पातु वरारोहा जिह्वामाम्नायरूपिणी ।
मुखं पातु महालक्ष्मीः कण्ठं वैकुण्ठवासिनी ॥ ४॥
स्कन्धौ मे जानकी पातु भुजौ भार्गवनन्दिनी ।
बाहू द्वौ द्रविणी पातु करौ हरिवराङ्गना ॥ ५॥
वक्षः पातु च श्रीर्देवी हृदयं हरिसुन्दरी ।
कुक्षिं च वैष्णवी पातु नाभिं भुवनमातृका ॥ ६॥
कटिं च पातु वाराही सक्थिनी देवदेवता ।
ऊरू नारायणी पातु जानुनी चन्द्रसोदरी ॥ ७॥
इन्दिरा पातु जंघे मे पादौ भक्तनमस्कृता ।
नखान् तेजस्विनी पातु सर्वाङ्गं करुणामयी ॥ ८॥
ब्रह्मणा लोकरक्षार्थं निर्मितं कवचं श्रियः ।
ये पठन्ति महात्मानस्ते च धन्या जगत्त्रये ॥ ९॥
कवचेनावृताङ्गनां जनानां जयदा सदा ।
मातेव सर्वसुखदा भव त्वममरेश्वरी ॥ १०॥
भूयः सिद्धिमवाप्नोति पूर्वोक्तं ब्रह्मणा स्वयम् ।
लक्ष्मीर्हरिप्रिया पद्मा एतन्नामत्रयं स्मरन् ॥ ११॥
नामत्रयमिदं जप्त्वा स याति परमां श्रियम् ।
यः पठेत्स च धर्मात्मा सर्वान्कामानवाप्नुयात् ॥ १२॥
॥ इति श्रीब्रह्मपुराणे इन्द्रोपदिष्टं महालक्ष्मीकवचं सम्पूर्णम् ॥

# सूर्यकवचस्तोत्रम्

## श्रीगणेशाय नमः ।

## याज्ञवल्क्य उवाच ।

शृणुष्व मुनिशार्दूल सूर्यस्य कवचं शुभम् ।
शरीरारोग्यदं दिव्यं सर्वसौभाग्यदायकम् ॥ १॥
देदीप्यमानमुकुटं स्फुरन्मकरकुण्डलम् ।
ध्यात्वा सहस्रकिरणं स्तोत्रमेतदुदीरयेत् ॥ २॥
शिरो मे भास्करः पातु ललाटं मेऽमितद्युतिः ।
नेत्रे दिनमणिः पातु श्रवणे वासरेश्वरः ॥ ३॥
घ्राणं घर्मघृणिः पातु वदनं वेदवाहनः ।
जिह्वां मे मानदः पातु कण्ठं मे सुरवन्दितः ॥ ४॥
स्कन्धौ प्रभाकरः पातु वक्षः पातु जनप्रियः ।
पातु पादौ द्वादशात्मा सर्वाङ्गं सकलेश्वरः ॥ ५॥
सूर्यरक्षात्मकं स्तोत्रं लिखित्वा भूर्जपत्रके ।
दधाति यः करे तस्य वशगाः सर्वसिद्धयः ॥ ६॥
सुस्नातो यो जपेत्सम्यग्योऽधीते स्वस्थमानसः ।
स रोगमुक्तो दीर्घायुः सुखं पुष्टिं च विन्दति ॥ ७॥
॥ इति श्रीमद्याज्ञवल्क्यमुनिविरचितं सूर्यकवचस्तोत्रं सम्पूर्णम् ॥

# बुधकवचम्

## श्रीगणेशाय नमः ।

अस्य श्रीबुधकवचस्तोत्रमन्त्रस्य कश्यप ऋषिः,
अनुष्टुप् छन्दः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥
बुधस्तु पुस्तकधरः कुङ्कुमस्य समद्युतिः ।
पीताम्बरधरः पातु पीतमाल्यानुलेपनः ॥ १॥
कटिं च पातु मे सौम्यः शिरोदेशं बुधस्तथा ।
नेत्रे ज्ञानमयः पातु श्रोत्रे पातु निशाप्रियः ॥ २॥
घ्राणं गन्धप्रियः पातु जिह्वां विद्याप्रदो मम ।
कण्ठं पातु विधोः पुत्रो भुजौ पुस्तकभूषणः ॥ ३॥
वक्षः पातु वराङ्गश्च हृदयं रोहिणीसुतः ।
नाभिं पातु सुराराध्यो मध्यं पातु खगेश्वरः ॥ ४॥
जानुनी रौहिणेयश्च पातु जङ्घेऽखिलप्रदः ।
पादौ मे बोधनः पातु पातु सौम्योऽखिलं वपुः ॥ ५॥
एतद्धि कवचं दिव्यं सर्वपापप्रणाशनम् ।
सर्वरोगप्रशमनं सर्वदुःखनिवारणम् ॥ ६॥
आयुरारोग्यशुभदं पुत्रपौत्रप्रवर्धनम् ।
यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७॥
॥ इति श्रीब्रह्मवैवर्तपुराणे बुधकवचं सम्पूर्णम् ॥

# श्रीशाकम्भरीपञ्चकम्

श्रीवल्लभसोदरी श्रितजनश्चिद्दायिनी श्रीमती
श्रीकण्ठार्धशरीरगा श्रुतिलसन्माणिक्यताटङ्कका ।
श्रीचक्रान्तरवासिनी श्रुतिशिरः सिद्धान्तमार्गप्रिया
श्रीवाणी गिरिजात्मिका भगवती शाकम्भरी पातु माम् ॥ १॥
शान्ता शारदचन्द्रसुन्दरमुखी शाल्यन्नभोज्यप्रिया
शाकैः पालितविष्टपा शतदृशा शाकोल्लसद्विग्रहा ।
श्यामाङ्गी शरणागतार्तिशमनी शक्रादिभिः शंसिता
शङ्कर्यष्टफलप्रदा भगवती शाकम्भरी पातु माम् ॥ २॥
कञ्जाक्षी कलशी भवादिविनुता कात्यायनी कामदा
कल्याणी कमलालया करकृतां भोजासिखेटाभया ।
कादंवासवमोदिनी कुचलसत्काश्मीरजालेपना
कस्तूरीतिलकाञ्चिता भगवती शाकम्भरी पातु माम् ॥ ३॥
भक्तानन्दविधायिनी भवभयप्रध्वंसिनी भैरवी
भर्मालङ्कृतिभासुरा भुवनभीकृद् दुर्गदर्पापहा ।
भूभृन्नायकनन्दिनी भुवनसूर्भास्यत्परः कोटिभा
भौमानन्द विहारिणी भगवती शाकम्भरी पातु माम् ॥ ४॥
रीताम्नायशिखासु रक्तदशना राजीवपत्रेक्षणा
राकाराजकरावदातहसिता राकेन्दुबिम्बस्थिता ।
रुद्राणी रजनीकरार्भकलसन्मौली रजोरूपिणी
रक्षः शिक्षणदीक्षिता भगवती शाकम्भरी पातु माम् ॥ ५॥
श्लोकानामिह पञ्चकं पठति यः स्तोत्रात्मकं शर्मदं
सर्वापत्तिविनाशकं प्रतिदिनं भक्त्या त्रिसन्ध्यं नरः ।
आयुःपूर्णमपारमर्थममलां कीर्तिं प्रजामक्षयां
शाकम्भर्यनुकम्पया स लभते विद्यां च विश्वार्थकाम् ॥ ६॥
॥ इति श्रीमच्छङ्कराचार्यविरचितं शाकम्भरीपञ्चकं सम्पूर्णम् ॥

# केतुकवचम्

ॐ अस्य श्रीकेतुकवचस्तोत्रमहामन्त्रस्य त्र्यम्बक ऋषिः ।
अनुष्टुप्छन्दः । केतुर्देवता ।
कं बीजम् । नमः शक्तिः ।
केतुरिति कीलकम् ।
केतुकृत पीडा निवारणार्थे, सर्वरोगनिवारणार्थे,
सर्वशत्रुविनाशनार्थे, सर्वकार्यसिद्ध्यर्थे,
केतुप्रसादसिद्ध्यर्थे जपे विनियोगः ।

## श्रीगणेशाय नमः ।

केतुं करालवदनं चित्रवर्णं किरीटिनम् ।
प्रणमामि सदा केतुं ध्वजाकारं ग्रहेश्वरम् ॥ १॥
चित्रवर्णः शिरः पातु भालं धूम्रसमद्युतिः ।
पातु नेत्रे पिङ्गलाक्षः श्रुती मे रक्तलोचनः ॥ २॥
घ्राणं पातु सुवर्णाभश्चिबुकं सिंहिकासुतः ।
पातु कण्ठं च मे केतुः स्कन्धौ पातु ग्रहाधिपः ॥ ३॥
हस्तौ पातु सुरश्रेष्ठः कुक्षिं पातु महाग्रहः ।
सिंहासनः कटिं पातु मध्यं पातु महासुरः ॥ ४॥
ऊरू पातु महाशीर्षो जानुनी मेऽतिकोपनः ।
पातु पादौ च मे क्रूरः सर्वाङ्गं नरपिङ्गलः ॥ ५॥
य इदं कवचं दिव्यं सर्वरोगविनाशनम् ।
सर्वशत्रुविनाशं च धारणाद्विजयी भवेत् ॥ ६॥
॥ इति श्रीब्रह्माण्डपुराणे केतुकवचं सम्पूर्णम् ॥

# श्रीगङ्गाकवचम्

ॐ श्रीगणेशाय नमः । ॐ गङ्गायै नमः ।

## विनियोगः

गङ्गाकवचस्य विष्णुर्ऋषिविराट्छन्दः
चतुर्दश पुरुष उद्धारण अर्थे पाठे विनियोगः ।
ॐ द्रव्यरूपा महाभागा स्नाने च तर्पणेऽपि च ।
अभिषेके पूजने च पातु मां शुक्लरूपिणी ॥ १॥
विष्णुपादप्रसूतासि वैष्णवी नामधारिणी ।
पाहि मां सर्वतो रक्षेद्गङ्गा त्रिपथगामिनी ॥ २॥
मन्दाकिनी सदा पातु देहान्ते स्वर्गवल्लभा ।
अलकनन्दा च वामभागे पृथिव्यां या तु तिष्ठति ॥ ३॥
भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ।
पञ्चाक्षरमिमं मन्त्रं यः पठेच्छृणुयादपि ॥ ४॥
रोगी रोगात्प्रमुच्येत्बद्धो मुच्येत बन्धनात् ।
गुर्विणी जनयेत् पुत्रं वन्ध्या पुत्रवती भवेत् ॥ ५॥
गङ्गास्मरणमात्रेण निष्पापो जायते नरः ।
यः पठेद्गृहमध्ये तु गङ्गास्नानफलं लभेत् ॥ ६॥
स्नानकाले पठेद्यस्तु शतकोटिफलं लभेत् ।
यः पठेत्प्रयतो भक्त्या मुक्तः कोटिकुलैः सह ॥ ७॥
॥ इति श्रीविष्णुयामले शिवपार्वतीसंवादे गङ्गाकवचं सम्पूर्णम् ।

Created By
Dipti Dhakul

# शुक्रकवचम्

## श्रीगणेशाय नमः ।

ॐ अस्य श्रीशुक्रकवचस्तोत्रमन्त्रस्य भारद्वाज ऋषिः ।
अनुष्टुप्छन्दः । श्रीशुक्रो देवता ।
शुक्रप्रीत्यर्थे जपे विनियोगः ॥
मृणालकुन्देन्दुपयोजसुप्रभं
पीताम्बरं प्रसृतमक्षमालिनम् ।
समस्तशास्त्रार्थविधिं महान्तं ध्यायेत्कविं
वाञ्छितमर्थसिद्धये ॥ १॥
ॐ शिरो मे भार्गवः पातु भालं पातु ग्रहाधिपः ।
नेत्रे दैत्यगुरुः पातु श्रोत्रे मे चन्दनद्युतिः ॥ २॥
पातु मे नासिकां काव्यो वदनं दैत्यवन्दितः ।
वचनं चोशनाः पातु कण्ठं श्रीकण्ठभक्तिमान् ॥ ३॥
भुजौ तेजोनिधिः पातु कुक्षिं पातु मनोव्रजः ।
नाभिं भृगुसुतः पातु मध्यं पातु महीप्रियः ॥ ४॥
कटिं मे पातु विश्वात्मा ऊरू मे सुरपूजितः ।
जानुं जाड्यहरः पातु जङ्घे ज्ञानवतां वरः ॥ ५॥
गुल्फौ गुणनिधिः पातु पातु पादौ वराम्बरः ।
सर्वाण्यङ्गानि मे पातु स्वर्णमालापरिष्कृतः ॥ ६॥
य इदं कवचं दिव्यं पठति श्रद्धयान्वितः ।
न तस्य जायते पीडा भार्गवस्य प्रसादतः ॥ ७॥
॥ इति श्रीब्रह्माण्डपुराणे शुक्रकवचं सम्पूर्णम् ॥

# रेणुकाकवचं

## ॥ श्री गणेशाय नमः ॥

शृणु देवि प्रवक्ष्यामि रेणुकाकवचं परम् ।
येन विज्ञानमात्रेण सान्निध्यं रेणुका भवेत् ॥
रेणुकाकवचस्यास्य भार्गवस्तु ऋषिः स्मृतः ।
छन्दोऽनुष्टुप् तथा देवी रेणुका देवता मम ॥
इष्ट-काम्यार्थ-सिद्ध्यर्थे विनियोगो वरानने ।
रेणुका मे शिरः पातु परा शक्तिस्वरूपिणी ॥
भालं रक्षतु भुवनेशी लोचनं मे त्रिलोचनी ।
मुखं मे रेणुका पातु नासिकां कालनाशिनी ॥
भ्रुवौ सुभ्रूलता पातु दन्तान्मे कुन्ददन्तिका ।
ओष्ठं बिम्बोष्ठिका पातु जिंह्वां पातु सुरेश्वरी ॥
ग्रीवां रक्षतु इन्द्राणी कुक्षौ रक्षेत्कुलेश्वरी ।
गण्डं मे पातु चामुण्डा महालक्ष्मीस्तु कन्धरम् ॥
असौ हंसप्रिया पातु बाहू सायुधवाहुका ।
वाणीं वक्षस्थलं पातु हृदयं हृदयेश्वरी ॥
जघने घनवाहा मे गुह्यं गुह्येश्वरी मम ।
ऊरू वरोरुका पातु श्रीदेवी सिद्धिदेवता ॥
सर्वाङ्गं सर्वदा पातु सर्वाणी रूपिणी वरा ।
इति श्रीरेणुका वर्म दुष्कर्म त्रासनं सदा ॥
स्तुतिमात्रेण भक्तानां संरक्षणविचक्षणम् ।
जप्त्वा तु कवचं देव्याः यत्र तत्र तु गच्छति ॥
तत्र तत्र जयो लाभः कार्यसिद्धिश्च जायते ।
॥ इति श्री डामरेश्वरतन्त्रे रेणुकाकवचं नाम षष्ठितमोऽध्यायः ॥

# श्रीगुरुदत्तात्रेय सङ्क्षिप्त कवचं

ॐ द्रां ॐ नमः,
श्रीगुरुदेवाय,
परमपुरुषाय,
सर्वदेवता वशीकराय,
सर्वारिष्ट विनाशनाय,
सर्वमन्त्रच्छेदनाय,
त्रैलोक्य वशमावय
स्वाहा ॐ द्रां ओम् ॥
इति श्रीगुरुदत्तात्रेय
सङ्क्षिप्त कवचं सम्पूर्णम् ।

# श्री अनघाकवचाष्टकम्

शिरो मे अनघा पातु भालं मे दत्तभामिनी ।
भ्रूमध्यं योगिनी पातु नेत्रे पातु सुदर्शिनी ॥ १॥
नासारन्ध्रद्वये पातु योगिशी भक्तवत्सला ॥
मुखं मे मधुवाक्पातु दत्तचित्तविहारिणी ॥ २॥
त्रिकण्ठी पातु मे कण्ठं वाचं वाचस्पतिप्रिया ।
स्कन्धौ मे त्रिगुणा पातु भुजौ कमलधारिणी ॥ ३॥
करौ सेवारता पातु हृदयं मन्दहासिनी ।
उदरं अन्नदा पातु स्वयञ्जा नाभिमण्डलम् ॥ ४॥
कमनिया कटि पातु गुह्यं गुह्येश्वरी सदा ।
ऊरु मे पातु जम्भघ्नी जानुनी रेणुकेष्टदा ॥ ५॥
पादौ पादस्थिता पातु पुत्रदा वै खिलं वपुः ।
वामगा पातु वामाङ्गं दक्षाङ्ग गुरुगामिनी ॥ ६॥
गृहं मे दत्तगृहिणी बाह्ये सर्वात्मिकाऽवतु ।
त्रिकाले सर्वदा रक्षेत् पतिशुश्रुणोत्सुका ॥ ७॥
जाया मे दत्तवामाङ्गी अष्टपुत्रा सुतोऽवतु ।
गोत्रमत्रि स्नुषा रक्षेदनघा भक्तरक्षणी ॥ ८॥
यः पठेदनघाकवचं नित्यं भक्तियुतो नरः ।
तस्मै भवत्यनघाम्बा वरदा सर्वभाग्यदा ॥
इति श्री अनघाकवचाष्टकं सम्पूर्णम् ।

# श्रीरामसर्वस्वस्तोत्रम्

## ॥ अथ श्रीरामसर्वस्वस्तोत्रम् ॥

रामो माता मत्पितारामचन्द्रो भ्रातारामो मत्सखा रामचेन्द्रः ।
रामः स्वामी राम एवार्थदाता रामादन्यं नैव जाने न जाने ॥ १॥
रामः सेव्यो वन्दनीयोऽपि रामो रामोनित्यं मादृशैश्चितनीयः ।
रामो ज्ञानं ध्यानगम्योऽपि रामो रामादन्यं नैव जाने न जाने ॥ २॥
रामो भुक्तिर्मुक्तिदाता च रामो रामोऽस्माकं राजते राजराजः ।
लोकेऽस्माभिर्लोक्यते रामचन्द्रो रामादन्यं नैव जाने न जाने ॥ ३॥
रामोधर्मः कर्मरामो मदीयं रामोमह्यं कर्मसिद्धिप्रदाता ।
रामोऽजस्रः कर्मसिद्धिस्वरूपी रामादन्यं नैव जाने न जाने ॥ ४॥
रामोऽस्माभिः पूजनीयोनितान्तं रामोऽस्माभिः प्रत्यहं कीर्तनीयः ।
रामोऽस्माभिर्गोपनीयो गुहान्ते रामदन्यं नैव जाने न जाने ॥ ५॥
रामोऽस्माकं दुःखहर्ता त्रिलोक्यां रामोऽस्माकं कर्मकर्ता सदैव ।
रामोऽस्माकं कर्मभूतो विभाति रामादन्यं नैव जाने न जाने ॥ ६॥
रामोज्ञातिः ख्यातिरप्येव रामो रामः कीर्तिः पूर्तिरप्येव रामः ।
सर्वस्वं मे रामचन्द्रोऽवनीन्द्रो रामादन्यं नैव जाने न जाने ॥ ७॥
ग्रामेरण्ये जागरे स्वप्नकाले मार्गे दुर्गे गच्छतोऽगच्छतो मे ।
शश्वल्लोके रक्षकस्त्वेव रामो रामादन्यं नैव जाने न जाने ॥ ८॥
ये वै त्रिसन्ध्यं प्रपठन्ति नित्यं श्रीरामसर्वस्वमनन्य भक्त्या ।
श्रीरामरामेण कृतं कृतार्थास्तेऽप्यच्युतं रामपदं प्रयान्ति ॥ ९॥

## इति श्रीरामसर्वस्वस्तोत्रं सम्पूर्णम् ॥

# रेणुकाकवचं

## ॥ श्री गणेशाय नमः ॥

शृणु देवि प्रवक्ष्यामि रेणुकाकवचं परम् ।
येन विज्ञानमात्रेण सान्निध्यं रेणुका भवेत् ॥
रेणुकाकवचस्यास्य भार्गवस्तु ऋषिः स्मृतः ।
छन्दोऽनुष्टुप् तथा देवी रेणुका देवता मम ॥
इष्ट-काम्यार्थ-सिद्ध्यर्थे विनियोगो वरानने ।
रेणुका मे शिरः पातु परा शक्तिस्वरूपिणी ॥
भालं रक्षतु भुवनेशी लोचनं मे त्रिलोचनी ।
मुखं मे रेणुका पातु नासिकां कालनाशिनी ॥
भ्रुवौ सुभ्रूलता पातु दन्तान्मे कुन्ददन्तिका ।
ओष्ठं बिम्बोष्ठिका पातु जिंह्वां पातु सुरेश्वरी ॥
ग्रीवां रक्षतु इन्द्राणी कुक्षौ रक्षेत्कुलेश्वरी ।
गण्डं मे पातु चामुण्डा महालक्ष्मीस्तु कन्धरम् ॥
असौ हंसप्रिया पातु बाहू सायुधवाहुका ।
वाणीं वक्षस्थलं पातु हृदयं हृदयेश्वरी ॥
जघने घनवाहा मे गुह्यं गुह्येश्वरी मम ।
ऊरू वरोरुका पातु श्रीदेवी सिद्धिदेवता ॥
सर्वाङ्गं सर्वदा पातु सर्वाणी रूपिणी वरा ।
इति श्रीरेणुका वर्म दुष्कर्म त्रासनं सदा ॥
स्तुतिमात्रेण भक्तानां संरक्षणविचक्षणम् ।
जप्त्वा तु कवचं देव्याः यत्र तत्र तु गच्छति ॥
तत्र तत्र जयो लाभः कार्यसिद्धिश्च जायते ।

॥ इति श्री डामरेश्वरतन्त्रे रेणुकाकवचं नाम षष्ठितमोऽध्यायः ॥

# त्रैलोक्यविद्या

## ॥ अथ त्रैलोक्यविजयविद्या ॥

# ईश्वर उवाच

त्रैलोक्यविजयां वक्ष्ये सर्वयन्त्रविमर्दिनीम् ॥ १॥
ॐ हूं क्षूं हूं ॐ नमो भगवति दंष्ट्रणि भीमवक्त्रे महोग्ररूपे
हिलि हिलि रक्तनेत्रे किलि किलि महानिस्वने कुलु
ॐ निर्मांसे कट कट गोनसाभरणे चिलि चिलि शवमालाधारिणि द्रावय,
ॐ महारौद्रि सार्द्रचर्मकृताच्छदे विजृम्भ,
ॐ पूत्यासिलताधारिणि,
भृकुटीकृतापाङ्गि विषमनेत्रकृतानने वसामेदो विलिप्तगात्रे कह कह,
ॐ हस हस क्रुद्ध क्रुद्ध ॐ नीलजीमूतवर्णोऽभ्रमालाकृताभरणे विस्फुर,
ॐ घण्टारवावकीर्णदिहे, ॐ सिंसिस्थेऽरुणवर्णे,
ॐ ह्रां ह्रीं ह्रूं रौद्र रूपे
ह्रूँ ह्रीं क्लीं ॐ ह्रीं ह्रूं ओमाकर्षय ॐ धून धून,
ॐ हे हः खः वज्रिणि भिन्द,
ॐ महाकाये छिन्द ॐ करालिनि किटि किटि महाभूतमातः सर्वदुष्टनिवारिणि
जये, ॐ विजये ॐ त्रैलोक्य विजये हूं फट् स्वाहा ॥ २॥
नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेज्जये ।
न्यासं कृत्वा तु पञ्चाङ्गं रक्तपुष्पाणि होमयेत् ।
सङ्ग्रामे सैन्यभङ्गः स्यात्त्रैलोक्यविजयापठात् ॥ ३॥
ॐ बहुरूपाय स्तम्भय स्तम्भय, ॐ मोहय, ॐ सर्वशत्रून्द्रावय,
ॐ ब्रह्माणमाकर्षय, ॐ विष्णुमाकर्षय, ॐ महेश्वरमाकर्षय,
ओमिन्द्रं टालय, ॐ पर्वतांश्चालय, ॐ सप्तसागराञ्शोषय,
ॐ छिन्दच्छिन्द बहुरूपाय नमः ॥ ४॥
भुजङ्गं नाममृणमूर्तिसंस्थं विद्यादरिं ततः ॥ ५॥
इति त्रैलोक्यविजयविद्या सम्पूर्णा ॥

# सूर्यकवचस्तोत्रम्

## श्रीगणेशाय नमः ।

## याज्ञवल्क्य उवाच ।

शृणुष्व मुनिशार्दूल सूर्यस्य कवचं शुभम् ।
शरीरारोग्यदं दिव्यं सर्वसौभाग्यदायकम् ॥ १॥
देदीप्यमानमुकुटं स्फुरन्मकरकुण्डलम् ।
ध्यात्वा सहस्रकिरणं स्तोत्रमेतदुदीरयेत् ॥ २॥
शिरो मे भास्करः पातु ललाटं मेऽमितद्युतिः ।
नेत्रे दिनमणिः पातु श्रवणे वासरेश्वरः ॥ ३॥
घ्राणं घर्मघृणिः पातु वदनं वेदवाहनः ।
जिह्वां मे मानदः पातु कण्ठं मे सुरवन्दितः ॥ ४॥
स्कन्धौ प्रभाकरः पातु वक्षः पातु जनप्रियः ।
पातु पादौ द्वादशात्मा सर्वाङ्गं सकलेश्वरः ॥ ५॥
सूर्यरक्षात्मकं स्तोत्रं लिखित्वा भूर्जपत्रके ।
दधाति यः करे तस्य वशगाः सर्वसिद्धयः ॥ ६॥
सुस्नातो यो जपेत्सम्यग्योऽधीते स्वस्थमानसः ।
स रोगमुक्तो दीर्घायुः सुखं पुष्टिं च विन्दति ॥ ७॥
॥ इति श्रीमद्याज्ञवल्क्यमुनिविरचितं सूर्यकवचस्तोत्रं सम्पूर्णम् ॥

# श्रीकमलाकवचम्

## श्रीगणेशाय नमः ।

ॐ अस्याश्चतुरक्षराविष्णुवनितायाः
कवचस्य श्रीभगवान् शिव ऋषीः ।
अनुष्टुप्छन्दः । वाग्भवा देवता ।
वाग्भवं बीजम् । लज्जा शक्तिः ।
रमा कीलकम् । कामबीजात्मकं कवचम् ।
मम सुकवित्वपाण्डित्यसमृद्धिसिद्धये पाठे विनियोगः ।
ऐङ्कारो मस्तके पातु वाग्भवां सर्वसिद्धिदा ।
ह्रीं पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शाङ्करी ॥ १॥
जिह्वायां मुखवृत्ते च कर्णयोर्दन्तयोर्नसि ।
ओष्ठाधारे दन्तपङ्क्तौ तालुमूले हनौ पुनः ॥ २॥
पातु मां विष्णुवनिता लक्ष्मीः श्रीवर्णरूपिणी ॥
कर्णयुग्मे भुजद्वन्द्वे स्तनद्वन्द्वे च पार्वती ॥ ३॥
हृदये मणिबन्धे च ग्रीवायां पार्श्वर्योद्वयोः ।
पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा ॥ ४॥
उपस्थे च नितम्बे च नाभौ जंघाद्वये पुनः ।
जानुचक्रे पदद्वन्द्वे घुटिकेऽङ्गुलिमूलके ॥ ५॥
स्वधा तु प्राणशक्त्यां वा सीमन्यां मस्तके तथा ।
सर्वाङ्गे पातु कामेशी महादेवी समुन्नतिः ॥ ६॥
पुष्टिः पातु महामाया उत्कृष्टिः सर्वदाऽवतु ।
ऋद्धिः पातु सदा देवी सर्वत्र शम्भुवल्लभा ॥ ७॥
वाग्भवा सर्वदा पातु पातु मां हरगेहिनी ।
रमा पातु महादेवी पातु माया स्वराट् स्वयम् ॥ ८॥
सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी ।
विजया पातु भवने जया पातु सदा मम ॥ ९॥
शिवदूती सदा पातु सुन्दरी पातु सर्वदा ।
भैरवी पातु सर्वत्र भेरुण्डा सर्वदाऽवतु ॥ १०॥
त्वरिता पातु मां नित्यमुग्रतारा सदाऽवतु ।
पातु मां कालिका नित्यं कालरात्रिः सदाऽवतु ॥ ११॥
नवदुर्गाः सदा पातु कामाख्या सर्वदाऽवतु ।
योगिन्यः सर्वदा पातु मुद्राः पातु सदा सम ॥ १२॥
मात्राः पातु सदा देव्यश्चक्रस्था योगिनी गणाः ।
सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा ॥ १३॥
पातु मां देवदेवी च लक्ष्मीः सर्वसमृद्धिदा ॥
॥ इति विश्वसारतन्त्रे श्रीकमलाकवचं सम्पूर्णम् ॥

# भगवतीकवचम्

अथ भगवती कवचम् ।

ॐ नमो भगवति वज्रशृङ्खले हन हन

ॐ भक्ष भक्ष ॐ अरे रक्तं पिब कपालेन रक्ताक्षि रक्तपटे भस्माङ्गि भस्मलिप्तशरीरे वज्रायुधे वज्रप्राकारनिचिते ॐ पूर्वां दिशं बन्ध बन्ध ॐ दक्षिणां दिशं बन्ध बन्ध ॐ पश्चिमां दिशं बन्ध बन्ध ॐ उत्तरां दिशं बन्ध बन्ध

ॐ नागान् बन्ध बन्ध नागपत्नीर्बन्ध बन्ध ॐ असुरान् बन्ध बन्ध

ॐ यक्षराक्षसपिशाचान् बन्ध बन्ध प्रेतभूतगन्धर्वादि ये केचिदुपद्रवास्तेभ्यो रक्ष रक्ष ॐ ऊर्ध्वं रक्ष रक्ष अधो रक्ष रक्ष

क्षुरिकं बन्ध बन्ध ॐ ज्वलमहाबले घटि घटि ॐ मोटि मोटि

सटावलि वज्राङ्गि वज्रप्राकारे हुं फट् ह्रीं ह्रूं श्रीं फट् ह्रीं ह्रः फ्रूं फ्रें फ्रः सर्वग्रहेभ्यः सर्वव्याधिभ्यः सर्वदुष्टोपद्रवेभ्यः ह्रीं आमीवेभ्यो रक्ष रक्ष ग्रहभूत ज्वरादिषु सर्वकर्मषु योजयेत् ॥

इत्याग्नेयं भगवतीकवचं सम्पूर्णम् ॥

# श्रीमहालक्ष्मीकवचम्

# श्री गणेशाय नमः ।

अस्य श्रीमहालक्ष्मीकवचमन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः
महालक्ष्मीर्देवता महालक्ष्मीप्रीत्यर्थं जपे विनियोगः ।
इन्द्र उवाच । समस्तकवचानां तु तेजस्वि कवचोत्तमम् ।
आत्मरक्षणमारोग्यं सत्यं त्वं ब्रूहि गीष्पते ॥ १॥
श्रीगुरुरुवाच । महालक्ष्म्यास्तु कवचं प्रवक्ष्यामि समासतः ।
चतुर्दशसु लोकेषु रहस्यं ब्रह्मणोदितम् ॥ २॥
ब्रह्मोवाच । शिरो मे विष्णुपत्नी च ललाटममृतोद्भवा ।
चक्षुषी सुविशालाक्षी श्रवणे सागराम्बुजा ॥ ३॥
घ्राणं पातु वरारोहा जिह्वामाम्नायरूपिणी ।
मुखं पातु महालक्ष्मीः कण्ठं वैकुण्ठवासिनी ॥ ४॥
स्कन्धौ मे जानकी पातु भुजौ भार्गवनन्दिनी ।
बाहू द्वौ द्रविणी पातु करौ हरिवराङ्गना ॥ ५॥
वक्षः पातु च श्रीर्देवी हृदयं हरिसुन्दरी ।
कुक्षिं च वैष्णवी पातु नाभिं भुवनमातृका ॥ ६॥
कटिं च पातु वाराही सक्थिनी देवदेवता ।
ऊरू नारायणी पातु जानुनी चन्द्रसोदरी ॥ ७॥
इन्दिरा पातु जंघे मे पादौ भक्तनमस्कृता ।
नखान् तेजस्विनी पातु सर्वाङ्गं करुणामयी ॥ ८॥
ब्रह्मणा लोकरक्षार्थं निर्मितं कवचं श्रियः ।
ये पठन्ति महात्मानस्ते च धन्या जगत्त्रये ॥ ९॥
कवचेनावृताङ्गनां जनानां जयदा सदा ।
मातेव सर्वसुखदा भव त्वममरेश्वरी ॥ १०॥
भूयः सिद्धिमवाप्नोति पूर्वोक्तं ब्रह्मणा स्वयम् ।
लक्ष्मीर्हरिप्रिया पद्मा एतन्नामत्रयं स्मरन् ॥ ११॥
नामत्रयमिदं जप्त्वा स याति परमां श्रियम् ।
यः पठेत्स च धर्मात्मा सर्वान्कामानवाप्नुयात् ॥ १२॥
॥ इति श्रीब्रह्मपुराणे इन्द्रोपदिष्टं महालक्ष्मीकवचं सम्पूर्णम् ॥

# श्रीगङ्गाकवचम्

ॐ श्रीगणेशाय नमः । ॐ गङ्गायै नमः ।

## विनियोगः

गङ्गाकवचस्य विष्णुर्ऋषिविराट्छन्दः
चतुर्दश पुरुष उद्धारण अर्थे पाठे विनियोगः ।
ॐ द्रव्यरूपा महाभागा स्नाने च तर्पणेऽपि च ।
अभिषेके पूजने च पातु मां शुक्लरुपिणी ॥ १॥
विष्णुपादप्रसूतासि वैष्णवी नामधारिणी ।
पाहि मां सर्वतो रक्षेद्गङ्गा त्रिपथगामिनी ॥ २॥
मन्दाकिनी सदा पातु देहान्ते स्वर्गवल्लभा ।
अलकनन्दा च वामभागे पृथिव्यां या तु तिष्ठति ॥ ३॥
भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ।
पञ्चाक्षरमिमं मन्त्रं यः पठेच्छृणुयादपि ॥ ४॥
रोगी रोगात्प्रमुच्येत्बद्धो मुच्येत बन्धनात् ।
गुर्विणी जनयेत् पुत्रं वन्ध्या पुत्रवती भवेत् ॥ ५॥
गङ्गास्मरणमात्रेण निष्पापो जायते नरः ।
यः पठेद्गृहमध्ये तु गङ्गास्नानफलं लभेत् ॥ ६॥
स्नानकाले पठेद्यस्तु शतकोटिफलं लभेत् ।
यः पठेत्प्रयतो भक्त्या मुक्तः कोटिकुलैः सह ॥ ७॥
॥ इति श्रीविष्णुयामले शिवपार्वतीसंवादे गङ्गाकवचं सम्पूर्णम् ।

# मृतवत्सा कवचम्

कुब्जिकातन्त्रे सप्तदशः पटलः ।

## ॐ सिद्धिः ।

ॐ नमो नरसिंहाय ।

ॐ ॐ हां हां ह्रीं ह्रीं स्वाहा ।

अथ मृतवत्सा कवचम् ।

## श्रीभैरव उवाच

भगवन् सर्वधर्मज्ञ सर्वशास्त्रार्थपारग ।
स्त्रीभूत दानमी देव्याः कर्म स्वमय प्रभो ।

## श्रीभगवान् उवाच

स्त्रीभूत दामनी देवी बीजरूपा सदावतु ।
ह्रीं ऐं श्रीं वैं वैं वैं वैं रक्ष रक्ष सर्वभूतोपद्रवेब्यः स्वाहा ॥
ह्रीं पातु काली सर्वाङ्गं संसो भटराजाय स्वाहा ।
ह्रीं पातु वृद्धरूपसमातृका सर्वतोहरतु ।
इदन्तु परमं गुह्यं साधकाभीष्टदायकम् ।
सर्वरक्षाकरञ्चैव भूतप्रेतैर्विशेषतः ॥
अनपत्यया च या नारी मृतवत् सा च या भवेत् ।
वहूपुत्री जीववत्सा भवत्येव न संशयः ।
भूतप्रेतपिशाचाश्च ये चान्येऽनिष्टकारकाः ।
दुरादेव पलायन्ते कवचस्य च धारणात् ।
भूतानाञ्च प्रकृतिर्मृतवत् साहरा भवेत् ।
तव धार्यं प्रयत्नेन मृतवत्सा प्रनाशकम् ।
अवश्यं धारयेत् तस्या मृतवत्सादूरं गता ।
इति कुब्जिकातन्त्रे मृतवत्सा कवचं नाम सप्तदशः पटलः ॥

# श्रीकृष्णरक्षाकवचम्

# गोप्य ऊचुः

श्रीकृष्णस्ते शिरः पातु वैकुण्ठः कण्ठमेव हि ।
श्वेतद्वीपपतिः कर्णौ नासिकां यज्ञरूपधृक् ॥ १॥
नृसिंहो नेत्रयुग्मं च जिह्वां दशरथात्मजः ।
अधराववतां ते तु नरनाराणावृषी ॥ २॥
कपोलौ पातु ते साक्षात्सनकाद्याः कला हरेः ।
भालं ते श्वेतवाराहो नारदो भ्रूलतेऽवतु ॥ ३॥
चिबुकं कपिलः पातु दत्तात्रेय उरोऽवतु ।
स्कन्धौ द्वावृषभः पातु करौ मत्स्यः प्रपातु ते ॥ ४॥
दोर्दण्डं सततं रक्षेत्पृथुः पृथुलविक्रमः ।
उदरं कमठः पातु नाभिं धन्वन्तरिश्च ते ॥ ५॥
मोहिनी गुह्यदेशं च कटिं ते वामनोऽवतु ।
पृष्ठं परशुरामश्च तवोरू बादरायणः ॥ ६॥
बलो जानुद्वयं पातु जङ्घे बुद्धः प्रपातु ते ।
पादौ पातु सगुल्फौ च कल्किर्धर्मपतिः प्रभुः ॥ ७॥
सर्वरक्षाकरं दिव्यं श्रीकृष्णकवचं परम् ।
इदं भगवता दत्तं ब्रह्मणे नाभिपङ्कजे ॥ ८॥
ब्रह्मणा शम्भवे दत्तं शम्भुर्दुर्वाससे ददौ ।
दुर्वासाः श्रीयशोमत्यै प्रादाच्छ्रीनन्दमन्दिरे ॥ ९॥
अनेन रक्षां कृत्वास्य गोपीभिः श्रीयशोमती ।
इति गर्गसंहितायां गोलोकखण्डे त्रयोदशाध्यान्तर्गतं
गोपीभिः कृतं श्रीकृष्णरक्षाकवचम् ।

# महाविद्याकवचम्

शृणुदेवि प्रवक्ष्यामि कवचं सर्वसिद्धिदम् ।
आद्याया महाविद्यायाः सर्वाभीष्टफलप्रदम् ॥ १॥
कवचस्य ऋषिर्देवी सदाशिव इतीरितः ।
छन्दोऽनुष्टुप् देवता च महाविद्या प्रकीर्तितः ॥ २॥
धर्मार्थकाममोक्षाणां विनियोगश्च साधने ॥ ३॥
ऐंकारः पातु शीर्षे मां कामबीजं तथा हृदि ।
रमाबीजं सदापातु नाभौ गुह्ये च पादयोः ॥ ४॥
ललाटे सुन्दरी पातु उग्रा मां कण्ठदेशतः ।
भगमाला सर्वगात्रे लिङ्गे चैतन्यरूपिणी ॥ ५॥
पूर्वे मां पातु वाराही ब्रह्माणी दक्षिणे तथा ।
उत्तरे वैष्णवी पातु चेन्द्राणी पश्चिमेऽवतु ॥ ६॥
माहेश्वरी च आग्नेयां नैर्ऋते कमला तथा
वायव्यां पातु कौमारी चामुण्डा ईशकेऽवतु ॥ ७॥ (ऐशनेऽवतु)
इदं कवचमज्ञात्वा महाविद्याञ्च यो जपेत् ।
न फलं जायते तस्य कल्पकोटिशतैरपि ॥ ८॥
इति श्रीरुद्रयामले महाविद्याकवचं सम्पूर्णम् ॥

# चन्द्रकवचम्

## श्रीगणेशाय नमः ।

अस्य श्रीचन्द्रकवचस्तोत्रमन्त्रस्य गौतम् ऋषिः ।
अनुष्टुप् छन्दः, श्रीचन्द्रो देवता, चन्द्रप्रीत्यर्थं जपे विनियोगः ।
समं चतुर्भुजं वन्दे केयूरमुकुटोज्ज्वलम् ।
वासुदेवस्य नयनं शङ्करस्य च भूषणम् ॥ १॥
एवं ध्यात्वा जपेन्नित्यं शशिनः कवचं शुभम् ।
शशी पातु शिरोदेशं भालं पातु कलानिधिः ॥ २॥
चक्षुषी चन्द्रमाः पातु श्रुती पातु निशापतिः ।
प्राणं क्षपाकरः पातु मुखं कुमुदबान्धवः ॥ ३॥
पातु कण्ठं च मे सोमः स्कन्धे जैवातृकस्तथा ।
करौ सुधाकरः पातु वक्षः पातु निशाकरः ॥ ४॥
हृदयं पातु मे चन्द्रो नाभिं शङ्करभूषणः ।
मध्यं पातु सुरश्रेष्ठः कटिं पातु सुधाकरः ॥ ५॥
ऊरू तारापतिः पातु मृगाङ्को जानुनी सदा ।
अब्धिजः पातु मे जङ्घे पातु पादौ विधुः सदा ॥ ६॥
सर्वाण्यन्यानि चाङ्गानि पातु चन्द्रोऽखिलं वपुः ।
एतद्धि कवचं दिव्यं भुक्तिमुक्तिप्रदायकम् ।
यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७॥

॥ इति श्रीचन्द्रकवचं सम्पूर्णम् ॥

# श्रीनागराजकवचम्

## (विनियोगः)

नागराजस्य देवस्य कवचं सर्वकामदम् ।
ऋषिरस्य महादेवो गायत्री छन्द ईरितः ॥
ताराबीजं शिवाशक्तिः क्रोधबीजस्तु कीलकः ।
देवता नागराजस्तु फणामणिविराजितः ।
सर्वकामार्थसिध्यर्थे विनियोगः प्रकीर्तितः ॥

## (कवचम्)

अनन्तो मे शिरः पातु कण्ठं सङ्कर्षणस्तथा ।
कर्कोटको नेत्रयुग्मं कपिलः कर्णयुग्मकम् ॥ १॥
वक्षःस्थलं नागयक्षः बाहू कालभुजङ्गमः ।
उदरं धृतराष्ट्रश्च वज्रनागस्तु पृष्ठकम् ॥ २॥
मर्माङ्गमश्वसेनस्तु पादावश्वतरोऽवतु ।
वासुकिः पातु मां प्राच्ये आग्नेयां तु धनञ्जयः ॥ ३॥
तक्षको दक्षिणे पातु नैर्ऋत्यां शङ्खपालकः ।
महापद्मः प्रतीच्यां तु वायव्यां शङ्खनीलकः ॥ ४॥
उत्तरे कम्बलः पातु ईशान्यां नागभैरवः ।
ऊर्ध्वं चैरावतोऽधस्तात् नागभेतालनायकः ।
सदा सर्वत्र मां पातु नागलोकाधिनायकाः ॥ ५॥
इति श्रीनागराजकवचं सम्पूर्णम् ।

# राहुकवचम्

## श्रीगणेशाय नमः ॥

ॐ अस्य श्रीराहुकवचस्तोत्रमन्त्रस्य चन्द्रमा ऋषिः,
अनुष्टुप्छन्दः, रां बीजम्, नमः शक्तिः,
स्वाहा कीलकम्, राहुकृत पीडानिवारणार्थे, धनधान्य,
आयुरारोग्य आदि समृद्धि प्राप्तयर्थे जपे विनियोगः ॥

प्रणमामि सदा राहुं शूर्पाकारं किरीटिनम् ।
सैंहिकेयं करालास्यं लोकानामभयप्रदम् ॥ १॥
नीलाम्बरः शिरः पातु ललाटं लोकवन्दितः ।
चक्षुषी पातु मे राहुः श्रोत्रे त्वर्धशरीरवान् ॥ २॥
नासिकां मे धूम्रवर्णः शूलपाणिर्मुखं मम ।
जिह्वां मे सिंहिकासूनुः कण्ठं मे कठिनाङ्घ्रिकः ॥ ३॥
भुजङ्गेशो भुजौ पातु नीलमाल्याम्बरः करौ ।
पातु वक्षःस्थलं मन्त्री पातु कुक्षिं विधुन्तुदः ॥ ४॥
कटिं मे विकटः पातु ऊरू मे सुरपूजितः ।
स्वर्भानुर्जानुनी पातु जङ्घे मे पातु जाड्यहा ॥ ५॥
गुल्फौ ग्रहपतिः पातु पादौ मे भीषणाकृतिः ।
सर्वाण्यङ्गानि मे पातु नीलचन्दनभूषणः ॥ ६॥
राहोरिदं कवचमृद्धिदवस्तुदं यो
भक्त्या पठत्यनुदिनं नियतः शुचिः सन् ।
प्राप्नोति कीर्तिमतुलां श्रियमृद्धिमायु-
रारोग्यमात्मविजयं च हि तत्प्रसादात् ॥ ७॥

॥ इति श्रीमहाभारते धृतराष्ट्रसञ्जयसंवादे
द्रोणपर्वणि राहुकवचं सम्पूर्णम् ॥

# श्रीशाकम्भरीपञ्चकम्

श्रीवल्लभसोदरी श्रितजनश्चिद्दायिनी श्रीमती
श्रीकण्ठार्धशरीरगा श्रुतिलसन्माणिक्यताटङ्कका ।
श्रीचक्रान्तरवासिनी श्रुतिशिरः सिद्धान्तमार्गप्रिया
श्रीवाणी गिरिजात्मिका भगवती शाकम्भरी पातु माम् ॥ १॥
शान्ता शारदचन्द्रसुन्दरमुखी शाल्यन्नभोज्यप्रिया
शाकैः पालितविष्टपा शतदृशा शाकोल्लसद्विग्रहा ।
श्यामाङ्गी शरणागतार्तिशमनी शक्रादिभिः शंसिता
शङ्कर्यष्टफलप्रदा भगवती शाकम्भरी पातु माम् ॥ २॥
कञ्जाक्षी कलशी भवादिविनुता कात्यायनी कामदा
कल्याणी कमलालया करकृतां भोजासिखेटाभया ।
कादंवासवमोदिनी कुचलसत्काश्मीरजालेपना
कस्तूरीतिलकाञ्चिता भगवती शाकम्भरी पातु माम् ॥ ३॥
भक्तानन्दविधायिनी भवभयप्रध्वंसिनी भैरवी
भर्मालङ्कृतिभासुरा भुवनभीकृद् दुर्गदर्पापहा ।
भूभृन्नायकनन्दिनी भुवनसूर्भास्यत्परः कोटिभा
भौमानन्द विहारिणी भगवती शाकम्भरी पातु माम् ॥ ४॥
रीताम्नायशिखासु रक्तदशना राजीवपत्रेक्षणा
राकाराजकरावदातहसिता राकेन्दुबिम्बस्थिता ।
रुद्राणी रजनीकरार्भकलसन्मौली रजोरुपिणी
रक्षः शिक्षणदीक्षिता भगवती शाकम्भरी पातु माम् ॥ ५॥
श्लोकानामिह पञ्चकं पठति यः स्तोत्रात्मकं शर्मदं
सर्वापत्तिविनाशकं प्रतिदिनं भक्त्या त्रिसन्ध्यं नरः ।
आयुःपूर्णमपारमर्थममलां कीर्तिं प्रजामक्षयां
शाकम्भर्यनुकम्पया स लभते विद्यां च विश्वार्थकाम् ॥ ६॥
॥ इति श्रीमच्छङ्कराचार्यविरचितं शाकम्भरीपञ्चकं सम्पूर्णम् ॥

# श्रीब्रह्मकवचम्

## ॐ श्रीब्रह्मणे नमः ।

कवचं शृणु चार्वङ्गि जगन्मङ्गलनामकम् ।
पठनाद्धारणाद्यस्य ब्रह्मज्ञो जायते ध्रुवम् ॥ १॥
परमात्मा शिरः पातु हृदयं परमेश्वरः ।
कण्ठं पातु जगत्त्राता वदनं सर्वदृग्विभुः ॥ २॥
करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः ।
सर्वाङ्गं सर्वदा पातु परब्रह्म सनातनम् ॥ ३॥
श्रीजगन्मङ्गलस्यास्य कवचस्य सदाशिवः ।
ऋषिश्छन्दोऽनुष्टुबिति परब्रह्म च देवता ॥ ४॥
चतुर्वर्गफलावाप्त्यै विनियोगः प्रकीर्तितः ।
यः पठेद्ब्रह्मकवचं ऋषिन्यासपुरःसरम् ॥ ५॥
स ब्रह्मज्ञानमासाद्य साक्षाद्ब्रह्ममयो भवेत् ।
भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि ॥ ६॥
कण्ठे वा दक्षिणे बाहौ सर्वसिद्धीश्वरो भवेत् ।
इत्येतत् परमं ब्रह्मकवचं ते प्रकाशितम् ॥ ७॥
दद्यात् प्रियाय शिष्याय गुरुभक्ताय धीमते ।
पठित्वा स्तोत्रकवचं प्रणमेत्साधकाग्रणीः ॥ ८॥
ॐ नमस्ते परमं ब्रह्म नमस्ते परमात्मने ।
निर्गुणाय नमस्तुभ्यं सद्रूपाय नमो नमः ॥ ९॥
ॐ श्रीब्रह्मणे नमः । ॐ श्रीब्रह्मणे नमः । ॐ श्रीब्रह्मणे नमः ।

॥ इति श्रीब्रह्मकवचं सम्पूर्णम् ॥

## ॥ शुभमस्तु ॥

# मङ्गलकवचम्

## श्रीगणेशाय नमः ।

अस्य श्री अङ्गारककवचस्तोत्रमन्त्रस्य कश्यप ऋषिः,
अनुष्टुप् छन्दः, अङ्गारको देवता, भौमप्रीत्यर्थं जपे विनियोगः ।

रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् ।
धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः ॥ १॥

अङ्गारकः शिरो रक्षेन्मुखं वै धरणीसुतः ।
श्रवौ रक्ताम्बरः पातु नेत्रे मे रक्तलोचनः ॥ २॥

नासां शक्तिधरः पातु मुखं मे रक्तलोचनः ।
भुजौ मे रक्तमाली च हस्तौ शक्तिधरस्तथा ॥ ३॥

वक्षः पातु वराङ्गश्च हृदयं पातु रोहितः ।
कटिं मे ग्रहराजश्च मुखं चैव धरासुतः ॥ ४॥

जानुजङ्घे कुजः पातु पादौ भक्तप्रियः सदा ।
सर्वाण्यन्यानि चाङ्गानि रक्षेन्मे मेषवाहनः ॥ ५॥

य इदं कवचं दिव्यं सर्वशत्रुनिवारणम् ।
भूतप्रेतपिशाचानां नाशनं सर्वसिद्धिदम् ॥ ६॥

सर्वरोगहरं चैव सर्वसम्पत्प्रदं शुभम् ।
भुक्तिमुक्तिप्रदं नृणां सर्वसौभाग्यवर्धनम् ।
रोगबन्धविमोक्षं च सत्यमेतन्न संशयः ॥ ७॥

॥ इति श्रीमार्कण्डेयपुराणे मङ्गलकवचं सम्पूर्णम् ॥

# वंशलाभाख्यकवचम्

## नारद उवाच

भगवन् सर्वधर्मज्ञ पार्वतीप्राणवल्लभ ।
वंशलाभाख्यकवचं कृपया मे प्रकाशय ॥

## ईश्वर उवाच

वंशलाभाख्यकवचं दुर्लभं भुवनत्रये ।
यस्य प्रसादात् कमला लेभे तनयमुत्तमम् ॥
कामदेवमपर्णा च विनायकषडाननौ ।
जयन्तभिन्द्रवनिता देवपत्न्यः सुतानपि ॥

## विनियोगः

अस्य वंशलाभाख्यकवचस्य भैरवऋषिरनुष्टुपछन्दः,
श्रीपार्वती देवता, जीविततनयप्राप्तये विनियोगः ।
पार्वती मे शिरः पातु वक्त्रं पातु महेश्वरी ।
भवानी नयने पातु भ्रुवौ शङ्करसुन्दरी ॥ १॥
मध्ये पातु महेशानी नितम्बं सुरवन्दिता ।
ऊरू गौरी सदा पातु कौशिकी जानुयुग्मकम् ॥ २॥
बाहु द्वौ सुमुखी पातु पाणियुग्मं सुभाविनी ।
पादौ ब्रह्ममयी पातु श्रवणे भुवनेश्वरी ॥ ३॥
नासिके ललिता पातु कण्ठं त्रिपुरसुन्दरी ।
रुद्राणी हृदयं पातु स्तनद्वन्द्वं महेश्वरी ॥ ४॥
आपादमस्तकं पातु सर्वाङ्गं सर्वमङ्गला ।
इति ते कथितं विप्र कवचं देवपूजितम् ॥ ५॥
पठित्वा धारयित्वा च अक्षयं तनयं लभेत् ।
ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वा पठेन्नरः ॥ ६॥
सहस्रादित्यसङ्काशां सर्वाभरणभूषिताम् ।
त्रिनेत्रां पाणिविन्यस्तपाशाङ्कुशवराभयाम् ॥ ७॥
॥ श्रीभैरवतन्त्रे शिवनारदसंवादे वंशलाभाख्यकवचं सम्पूर्ण ॥

# बुधकवचम्

## श्रीगणेशाय नमः ।

अस्य श्रीबुधकवचस्तोत्रमन्त्रस्य कश्यप ऋषिः,
अनुष्टुप् छन्दः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥
बुधस्तु पुस्तकधरः कुङ्कुमस्य समद्युतिः ।
पीताम्बरधरः पातु पीतमाल्यानुलेपनः ॥ १॥
कटिं च पातु मे सौम्यः शिरोदेशं बुधस्तथा ।
नेत्रे ज्ञानमयः पातु श्रोत्रे पातु निशाप्रियः ॥ २॥
घ्राणं गन्धप्रियः पातु जिह्वां विद्याप्रदो मम ।
कण्ठं पातु विधोः पुत्रो भुजौ पुस्तकभूषणः ॥ ३॥
वक्षः पातु वराङ्गश्च हृदयं रोहिणीसुतः ।
नाभिं पातु सुराराध्यो मध्यं पातु खगेश्वरः ॥ ४॥
जानुनी रौहिणेयश्च पातु जङ्घेऽखिलप्रदः ।
पादौ मे बोधनः पातु पातु सौम्योऽखिलं वपुः ॥ ५॥
एतद्धि कवचं दिव्यं सर्वपापप्रणाशनम् ।
सर्वरोगप्रशमनं सर्वदुःखनिवारणम् ॥ ६॥
आयुरारोग्यशुभदं पुत्रपौत्रप्रवर्धनम् ।
यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७॥
॥ इति श्रीब्रह्मवैवर्तपुराणे बुधकवचं सम्पूर्णम् ॥

# केतुकवचम्

ॐ अस्य श्रीकेतुकवचस्तोत्रमहामन्त्रस्य त्र्यम्बक ऋषिः ।
अनुष्टुप्छन्दः । केतुर्देवता ।
कं बीजम । नमः शक्तिः ।
केतुरिति कीलकम् ।
केतुकृत पीडा निवारणार्थे, सर्वरोगनिवारणार्थे,
सर्वशत्रुविनाशनार्थे, सर्वकार्यसिद्ध्यर्थे,
केतुप्रसादसिद्ध्यर्थे जपे विनियोगः ।

## श्रीगणेशाय नमः ।

केतुं करालवदनं चित्रवर्णं किरीटिनम् ।
प्रणमामि सदा केतुं ध्वजाकारं ग्रहेश्वरम् ॥ १॥
चित्रवर्णः शिरः पातु भालं धूम्रसमद्युतिः ।
पातु नेत्रे पिङ्गलाक्षः श्रुती मे रक्तलोचनः ॥ २॥
घ्राणं पातु सुवर्णाभश्चिबुकं सिंहिकासुतः ।
पातु कण्ठं च मे केतुः स्कन्धौ पातु ग्रहाधिपः ॥ ३॥
हस्तौ पातु सुरश्रेष्ठः कुक्षिं पातु महाग्रहः ।
सिंहासनः कटिं पातु मध्यं पातु महासुरः ॥ ४॥
ऊरू पातु महाशीर्षो जानुनी मेऽतिकोपनः ।
पातु पादौ च मे क्रूरः सर्वाङ्गं नरपिङ्गलः ॥ ५॥
य इदं कवचं दिव्यं सर्वरोगविनाशनम् ।
सर्वशत्रुविनाशं च धारणाद्विजयी भवेत् ॥ ६॥
॥ इति श्रीब्रह्माण्डपुराणे केतुकवचं सम्पूर्णम् ॥

# मारुतिकवचम्

ॐ नमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभाप्रज्वलनाय ।
प्रतापवज्रदेहाय । अञ्जनागर्भसम्भूताय ।
प्रकटविक्रमवीरदैत्यदानवयक्षरक्षोगणग्रहबन्धनाय ।
भूतग्रहबन्धनाय । प्रेतग्रहबन्धनाय । पिशाचग्रहबन्धनाय ।
शाकिनीडाकिनीग्रहबन्धनाय । काकिनीकामिनीग्रहबन्धनाय ।
ब्रह्मग्रहबन्धनाय । ब्रह्मराक्षसग्रहबन्धनाय । चोरग्रहबन्धनाय ।
मारीग्रहबन्धनाय । एहि एहि । आगच्छ आगच्छ । आवेशय आवेशय ।
मम हृदये प्रवेशय प्रवेशय । स्फुर स्फुर । प्रस्फुर प्रस्फुर ।
सत्यं कथय । व्याघ्रमुखबन्धन । सर्पमुखबन्धन ।
राजमुखबन्धन । नारीमुखबन्धन । सभामुखवन्धन ।
शत्रुमुखबन्धन । सर्वमुखबन्धन । लङ्काप्रासादभञ्जन ।
अमुकं मे वशमानय । क्लीं क्लीं क्लीं ह्रीं श्रीं श्रीं राजानं वशमानय ।
श्रीं ह्रीं क्लीं स्त्रिय आकर्षय आकर्षय शत्रून्मर्दय मर्दय मारय मारय चूर्णय चूर्णय
खे खे श्रीरामचन्द्राज्ञया मम कार्यसिद्धिं कुरु कुरु ।
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् स्वाहा ।
विचित्रवीर हनूमन् मम सर्वशत्रून् भस्मी कुरु कुरु ।
हन हन हुं फट्स्वाहा ।
(एकादशशतवारं जपित्वा सर्वशत्रून् वशमानयति नान्यथा इति ॥)

# बृहस्पतिकवचम्

## श्रीगणेशाय नमः ।

अस्य श्रीबृहस्पतिकवचस्तोत्रमन्त्रस्य ईश्वर ऋषिः,
अनुष्टुप् छन्दः, गुरुर्देवता, गं बीजं, श्रीशक्तिः,
क्लीं कीलकं, गुरुप्रीत्यर्थं जपे विनियोगः ।

अभीष्टफलदं देवं सर्वज्ञं सुरपूजितम् ।
अक्षमालाधरं शान्तं प्रणमामि बृहस्पतिम् ॥ १॥
बृहस्पतिः शिरः पातु ललाटं पातु मे गुरुः ।
कर्णौ सुरगुरुः पातु नेत्रे मेऽभीष्टदायकः ॥ २॥
जिह्वां पातु सुराचार्यो नासां मे वेदपारगः ।
मुखं मे पातु सर्वज्ञो कण्ठं मे देवतागुरुः ॥ ३॥
भुजावाङ्गिरसः पातु करौ पातु शुभप्रदः ।
स्तनौ मे पातु वागीशः कुक्षिं मे शुभलक्षणः ॥ ४॥
नाभिं देवगुरुः पातु मध्यं पातु सुखप्रदः ।
कटिं पातु जगद्वन्द्य ऊरू मे पातु वाक्पतिः ॥ ५॥
जानुजङ्घे सुराचार्यो पादौ विश्वात्मकस्तथा ।
अन्यानि यानि चाङ्गानि रक्षेन्मे सर्वतो गुरुः ॥ ६॥
इत्येतत्कवचं दिव्यं त्रिसन्ध्यं यः पठेन्नरः ।
सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ॥ ७॥

॥ इति श्रीब्रह्मयामलोक्तं बृहस्पतिकवचं सम्पूर्णम् ॥

# श्रीदुर्गादेविकवचम्

श्रीगणेशाय नमः । ईश्वर उवाच ।
शृणु देवि प्रवक्ष्यामि कवचं सर्वसिद्धिदम् ।
पठित्वा पाठयित्वा च नरो मुच्येत सङ्कटात् ॥ १॥ पठित्वा धारयित्वा
अज्ञात्वा कवचं देवि दुर्गामन्त्रं च यो जपेत् ।
स नाप्नोति फलं तस्य परं च नरकं व्रजेत् ॥ २॥
इदं गुह्यतमं देवि कवचं तव कथ्यते ।
गोपनीयं प्रयत्नेन सावधानवधारय ॥ ३॥
उमादेवी शिरः पातु ललाटे शूलधारिणी ।
चक्षुषी खेचरी पातु कर्णौ चत्वरवासिनी ॥ ४॥ च द्वारवासिनी
सुगन्धा नासिके पातु वदनं सर्वधारिणी । सर्वसाधिनी
जिह्वां च चण्डिकादेवी ग्रीवां सौभद्रिका तथा ॥ ५॥
अशोकवासिनी चेतो द्वौ बाहू वज्रधारिणी ।
कण्ठं पातु महावाणी जगन्माता स्तनद्वयम् ॥ ६॥
हृदयं ललितादेवी उदरं सिंहवाहिनी ।
कटिं भगवती देवी द्वावूरू विन्ध्यवासिनी ॥ ७॥
महाबला च जङ्घे द्वे पादौ भूतलवासिनी ।
एवं स्थिताऽसि देवि त्वं त्रैलोक्ये रक्षणात्मिका । त्रैलोक्यरक्षणात्मिके
रक्ष मां सर्वगात्रेषु दुर्गे देवि नमोऽस्तुते ॥ ८॥
इत्येतत्कवचं देवि महाविद्या फलप्रद ।
यः पठेत्प्रातरुत्थाय स हि तीर्थफलं लभेत् ॥ ९॥
यो न्यसेत् कवचं देहे तस्य विघ्नं न क्वचित् ।
भूतप्रेतपिशाचेभ्यो भयं तस्य न विद्यते ॥ १०॥
॥ इति श्रीकुब्जिकातन्त्रे दुर्गाकवचं सम्पूर्णम् ॥

# श्रीबाला दुःस्वप्ननाशककवचम्

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशाङ्कुशवराभीतीर्धारयन्तीं शिवां भजे ॥ १॥
पुर्वस्यां भैरवी पातु बाला मां पातु दक्षिणे ।
मालिनी पश्चिमे पातु वासिनी चोत्तरेऽवतु ॥ २॥
ऊर्ध्वं पातु महादेवी श्रीबाला त्रिपुरेश्वरी ।
अधस्तात् पातु देवेशी पातालतलवासिनी ॥ ३॥
आधारे वाग्भवः पातु कामराजस्तथा हृदि ।
महाविद्या भगवती पातु मां परमेश्वरी ॥ ४॥
ऐं लं ललाटे मां पायात् ह्रौं ह्रीं हंसश्च नेत्रयोः ।
नासिकाकर्णयोः पातु ह्रीं ह्रैं तु चिबुके तथा ॥ ५॥
सौः पातु मे हृदि गले ह्रीं ह्रः नाभिदेशके ।
सौः क्लीं श्रीं गुह्यदेशे तु ऐं ह्रीं पातु च पादयोः ॥ ६॥
ह्रीं क्लीं मां सर्वतः पातु सौः पायात् पदसन्धिषु ।
जले स्थले तथा कोशे देवराजगृहे तथा ॥ ७॥
क्षें क्षें मां त्वरिता पातु मां चक्री सौः मनोभवा ।
हंसौः पायान्महादेवी परं निष्कलदेवता ॥ ८॥
विजया मङ्गला दूती कल्पा मां भगमालिनी ।
ज्वालामालिनी नित्या सर्वदा पातु मां शिवा ॥ ९॥
इतीदं कवचं देवि देवानामपि दुर्लभम् ।
तव प्रीत्या समाख्यातं गोपनीयं प्रयत्नतः ॥ १०॥
इदं रहस्यं परमं गुह्याद्गुह्यतरं प्रिये ।
धन्यं प्रशस्यमायुष्यं भोगमोक्षप्रदं शिवम् ॥ ११॥
इति श्रीबाला दुःस्वप्ननाशककवचं (४) सम्पूर्णम् ।